श्रीमत्परमहंसपरिव्राजकाचार्य श्रीपरमशिवेन्द्र-

सरस्वतीपादाब्जसेवापरायणेन

श्रीसदाशिवेन्द्रसरस्वत्या

विरचितानि

श्रीवाणीविलासमुद्रायन्त्रालय

श्रीरङ्गम् ।

विषयाः॥



-

# PREFACE

While printing the Advaita Volume of the Descriptive catalogue of the Sanskrit Manuscripts in the Tanjore Palace Library we came across several Mss of works attributed to Sri Sadasiva Brahmendra Among them was found in one of the Mss of Atmavidyavilasa the following letter written by a Pandit of the Tanjore Court to the then Maharaja of Tanjore Sarabhoji I (1711—1729) and as it is of historical interest it is printad here in full The writer says that he personally met Sri Sadasiva Brahmendra at Dipambapuram in the Tanjore Dt and begged of him to bless his patron the King Sarabhoji with a son The great Saint whom the writer regarded as Brahman personified showed by signs that the King would be blessed with a son ere long and presented him (the writer) with the work Atmavidyavilasa composed by him The writer then offered the sage three Bhikshas on behalf of the Maharaja and by the blessings of this great Yogi the Maharaja got a son soon after testifying thereby to the maxim that the words of the Great never go in vain This

Manuscript of Atmavidyavilasa and this letter written at the end of it are now preserved in the Tanjore Palace Library.

निर्व्याजं भवता तुरीयरगृहद्वारासिकां त्याजिताः
वीरश्रीशरभाक्षितीश्वर वयं किं वान्यदाशास्महे ।
क्षीरक्षालितशर्वशेखरकलाधावल्यगर्वच्छिदा
कीर्त्या भासितदिक्तटा भवतु ते सन्तानपारम्परी ॥ १ ॥

निर्गत्य तञ्जानगरात् श्रीमतामाज्ञया मया ।
कुम्भकोणे गतं तत्र दिनमेकमभूत्स्थितम् ॥ २ ॥

मायूरमगमं स्नात्वा कावेर्यां दिनपञ्चकम् ।
सायंप्रातर्नमस्कृत्य शंकरं लोकशंकरम ॥

पुत्रोत्पत्तिं समाशास्य महाराजस्य भूयसीम् ।
पुत्रलाभाय भवतां वैद्यनाथालयं गतः ॥

बालाम्बिकापरिवृढं प्रसाद्य बहुधा ततः ।
समागतोऽस्मि दीपाम्बापुरं तत्सर्वमानितम् ॥

सदाशिवब्रह्मरूपं मद्भाद्रार्थं चिरेप्सितम् ।
प्रणम्य प्रार्थितास्ते हि महाराजकृते मया ॥

पुत्रोत्पत्तौ झटित्यत्र प्रसादः क्रियतामिति ।
संज्ञया सूचयन् पुत्रो भविता ह्यचिरादिति ॥

आत्मविद्याविलासाख्यः स्वीयो ग्रन्थः प्रसादितः ।
युष्माकं भूयसे भाविश्रेयसे कारिता मया ॥

भिक्षासितस्तत्प्रसादात्पुत्रसम्पत्तिरुत्तमा ।
जातेयमिति चाश्रौषं श्रीमतां भवतामिह ॥

महत्प्रसादचिह्नानि श्रेयांसीति वदन्ति हि ।
भवत्प्रहितवैद्येन दत्तौषधिनिषेवणात् ॥

आनुकूल्यं शरीरस्य सम्यगेव हि दृश्यते ।
इतःपरं तथा शक्तिर्नास्ति देशान्तराटने ॥

वार्धक्यादपि दौर्बल्यादलंबुध्या च साम्प्रतम् ।
कावेरीतीर एवात्र वस्तव्यमिति निश्चयः ॥

भवत्क्लृप्तग्रामहारेषु तत्रापि स्वरसा रुचिः ।
त्रिकोटिहाख्यके मुक्तिक्षेत्रे प्रीतिरनुत्तमा ॥

ग्रामोपकण्ठे वासार्थं तेषां हि शिवसन्निधौ ।
निर्मातव्यो मठः कश्चिदित्येवं निश्चितं मया ॥

भवतामाज्ञया तत्र जायते मठनिर्मितिः ।
इदं च भवता सर्वं श्रेयसे प्रार्थ्यते मया ॥

करादृतमहीचक्रः परसैन्यभयंकरः ।
शरभोजिमहीपालः शरदां शतमेधताम् ॥

करदीकृतभूपाल वरदीकृतवासव ।
शारदीयति ते कीर्तिः शरभोजिमहीपते ॥

मल्लारिपण्डितेन्द्रस्य मात्रा चासौ नियोजित ।
अनन्तदेवनामासौ पद्यानारचयत्कविः ॥

The other works printed herein are all by Sir Sadasiva Brahmendra Excepting the Atmavidya vilasa and the Navavarnaratnamala all the others are unpublished hitherto The Ms of Dakshninamurti-dhyanam was sent to us by Brahmasri S Subrahmanya Sastri of Pudukotah and of the two Ms of Manoniyamanam we got, one was given us by Brahmasri S K Ramaswamy Somayajiar and the other by Brahmasri V S Venkatarama Sastrigal. The Mss of all the other works are found in the Tanjore Palace Sarasvati Mahal Library.

*T. K. B*

---



# नवमणिमाला ॥



विषयेषु निर्व्यपेक्षं
विमलतरज्ञानसंपदध्यक्षम् ।
परमकरुणार्द्रवीक्षं
परमशिवाचार्यपादमद्राक्षम् ॥ १ ॥

निर्जितवादिमृगेन्द्रं
भर्जितमदमानकामवैरीन्द्रम् ।
श्रितचयकुवलयचन्द्रं
परमशिवेन्द्रं भजामि निस्तन्द्रम् ॥ २ ॥

वेलातीतभवार्णव-
मग्नजनोद्धरणचातुरीधुर्यम् ।
प्रणतहृदम्बुजसूर्यं
परमशिवार्यं प्रणौमि गुरुवर्यम् ॥ ३ ॥

यत्करुणानीरनिधे-
निर्मलविद्यामयो मणिर्लब्धः ।
तं देशिकवरमन्तः
परमशिवाचार्यपादमवलम्बे ॥ ४ ॥

यस्योपर्याधाय
प्रत्यग्वाङ्मौखरीमरं स हरः ।
मौनमधारयदुचितं
परमशिवेन्द्रं तमानतोऽस्मि गुरुम् ॥ ५ ॥

व्याकुर्वति सति यस्मि-
न्नीशानः स्वाधिकारशैथिल्यात् ।
प्रापद्वटतरुमूलं
परमशिवेन्द्रं तमाभजे सततम् ॥ ६ ॥

प्रवितत्वनतजनमोह-
प्रशमनपदवाक्प्रबोधितात्मानम् ।
वरकरुणाभरजलधिं
परमशिवेन्द्रं धियां निधिं वन्दे ॥ ७ ॥

शमितान्तरसंतमसं
विरचितविज्ञानकैरवोल्लासम् ।
कलये परमशिवेन्द्रं
कमपि सुखाकाशपरिलसच्चन्द्रम् ॥ ८ ॥

यमिह निष्क्रियं निरंशं
सूक्ष्ममलक्ष्यं च शुद्धपरतत्त्वम् ।
तत्त्वमसीति वदन्तं
परमशिवेन्द्रं भजेऽहमश्रान्तम् ॥ ९ ॥

नवमणिमालामेतां
गुरुवरचरणारविन्दनुतिरूपाम् ।
धारयति यस्तु कण्ठे
स जयति कैवल्यसाम्राज्ये ॥ १० ॥

हरिः ॐ ॥ गुरवे नमः ॥

# आत्मानुसंधानम् ॥

अत्यन्ततविसंसिद्धशुद्धविद्यैकगोचरः ।
अनाद्यन्तः परात्मासौ जयत्यानन्दसुन्दरः ॥ १ ॥

श्रीमत्परशिवेन्द्रश्रीदेशिकानां वयं मुदा ।
अद्वैतानन्दमाध्वीकमङ्घ्रिपद्ममुपास्महे ॥ २ ॥

श्रीदेशिकोक्तवेदान्तनामसाहस्रमध्यगान् ।
काँश्चिन्नाममणीन्पद्यदामभिर्ग्रथयाम्यहम् ॥ ३ ॥

अच्युतोऽहमनन्तोऽहमतर्क्योऽहमजोऽस्म्यहम् ।
अप्राणोऽहमकायोऽहमसङ्गोऽस्म्यमयोऽस्म्यहम् ॥ ४ ॥

अशब्दोऽहमरूपोऽहमस्पर्शोऽस्म्यहमव्ययः ।
अरसोऽहमगन्धोऽहमनादिरमृतोऽस्म्यहम् ॥ ५ ॥

अक्षरोऽहमलिङ्गोऽहमजरोऽस्म्यकलोऽस्म्यहम् ।
अप्राणोऽहममूर्तोऽहमचिन्त्योऽस्म्यकृतोऽस्म्यहम् ॥ ६ ॥

अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ।
अगोत्रोऽहममात्रोऽहमचक्षुष्कोऽस्म्यवागहम् ॥ ७ ॥

अदृश्योऽहमवर्णोऽहमखण्डोऽस्म्यहमद्भुतः ।
अश्रुतोऽहमदृष्टोऽहमन्वेष्टव्योऽमरोऽस्म्यहम् ॥ ८ ॥

अवायुरस्म्यनाकाशोऽतेजस्कोऽव्यभिचार्यहम् ।
अमतोऽहमजातोऽहमतिसूक्ष्मोऽविकार्यहम् ॥ ९ ॥

अरजस्कोऽतमस्कोऽहमसत्त्वोऽस्म्यगुणोऽस्म्यहम् ।
अमायोऽनुभवात्माहमनन्योऽविषयोऽस्म्यहम् ॥ १० ॥

अद्वैतोऽहमपूर्वोऽहमबाह्योऽहमनन्तरः ।
अश्रोतोऽहमदीर्घोऽहमव्यक्तोऽहमनामयः ॥ ११ ॥

अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।
अनिच्छोऽहमलेपोऽहमकर्तास्म्यहमसङ्गः ॥ १२ ॥

अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ।
अनल्पोऽहमशोकोऽहमविकल्पोऽस्म्यविज्वलन् ॥ १३ ॥

आदिमध्यान्तहीनोऽहमाधारोऽस्म्यहमाततः ।
आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ १४ ॥

आनन्दामृतरूपोऽहमात्मसंस्थोऽहमान्तरः ।
आप्तकामोऽहमाकाशात्पर आत्मेश्वरोऽस्म्यहम् ॥ १५ ॥

ईशानोऽस्म्यहमीड्योऽहमहमुत्तमपूरुषः ।
उत्कृष्टोऽहमुपद्रष्टाहमुत्तरतरोऽस्म्यहम् ॥ १६ ॥

केवलोऽहं कविः कर्माध्यक्षोऽहं करणाधिपः ।
गुहाशयोऽहं गुप्तोऽहं चक्षुश्चक्षुरस्म्यहम् ॥ १७ ॥

चिदानन्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ।
ज्योतिर्मयोऽस्म्यहं ज्यायाञ्ज्योतिषां ज्योतिरस्म्यहम् ॥

तमसः साक्ष्यहं तुर्यतुर्योऽहं तमसः परः ।
दिव्यो देवोऽस्मि दुर्दर्शो द्रष्टा ध्येयो ध्रुवोऽस्म्यहम् ॥

नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ।
निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥

निर्विकारो नित्यपूतो निर्गुणो निःस्पृहोऽस्म्यहम् ।
निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥

पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ।
परावरोऽस्म्यहं प्रज्ञाप्रपञ्चोपशमोऽस्म्यहम् ॥ २२ ॥

परामृतोऽस्म्यहं पूर्णः प्रभुरस्मि पुरातनः ।
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ २३ ॥

प्रज्ञात्माहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ।
बहुधा चिन्त्यमानोऽहमहं ब्रह्मादिवन्दितः ॥ २४ ॥

बुद्धोऽहं भूतपालोऽहं भारूपो भगवानहम् ।
महादेवो महानस्मि महाज्ञेयो महेश्वरः ॥ २५ ॥

विमुक्तोऽहं विभुरहं वरेण्यो व्यापकोऽस्म्यहम् ।
वैश्वानरो वासुदेवो विश्वतश्चक्षुरस्म्यहम् ॥ २६ ॥

विश्वाधिकोऽहं विशदो विष्णुर्विश्वकृदस्म्यहम् ।
शुद्धोऽस्मि शुक्रः शान्तोऽहं शाश्वतोऽस्मि शिवोऽस्म्यहम्॥

सर्वभूतान्तरात्माहमहमस्मि सनातनः ।
सर्वेश्वरोऽहं सर्वज्ञः सूक्ष्मः सर्वगतोऽस्म्यहम् ॥ २८ ॥

अहं सकृद्विभातोऽहं स्वे महिम्नि प्रतिष्ठितः ।
सर्वान्तरः स्वयंज्योतिः सर्वाधिपतिरस्म्यहम् ॥ २९ ॥

सर्वभूताधिवासोऽहं सर्वव्यापी स्वराडहम् ।
समस्तसाक्षी सर्वात्मा सर्वभूतगुहाशयः ॥ ३० ॥

सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ।
स्थानत्रयव्यतीतोऽहं सर्वानुग्राहकोऽस्म्यहम् ॥ ३१ ॥

सच्चिदानन्दपूर्णात्मा सर्वप्रेमास्पदोऽस्म्यहम् ।
सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि सद्घनः ॥ ३२ ॥

सत्यस्वरूपः सन्मात्रः सिद्धः सर्वात्मकोऽस्म्यहम् ।
सर्वाधिष्ठानसन्मात्रस्वात्मा बन्धहरोऽस्म्यहम् ॥ ३३ ॥

सर्वप्राप्तोऽस्म्यहं सर्वद्रष्टा सर्वानुभूरहम् ।
स्वतन्त्रोऽस्मि सुनिस्पष्टः सुविमातोऽस्म्यहं हरिः ॥

अहं हरो हृदिस्थोऽहं हेतुदृष्टान्तवर्जितः ।
क्षेत्रज्ञः परमात्माहं श्रीमद्देशिकसूक्तितः ॥ ३५ ॥

इत्थमात्मानुसंधानपरो यः पुरुषो भवेत् ।
सोऽविद्याक्लेशनिर्मुक्तो ब्रह्मैव भवति स्वयम् ॥ ३६ ॥

इत्यात्मानुसंधानं समाप्तम् ॥



# स्वप्नोदितम् ॥



देशिकानुग्रहोत्तुङ्गतरङ्गशिशिराशयः ।
निवसामि निजानन्दपरिपूर्णैकभूमनि ॥ १ ॥

देशिकानुग्रहोत्तुङ्गमत्तमातङ्गमस्तकम् ।
आरुह्य विहराम्यात्मपदे समरसोज्ज्वले ॥ २ ॥

देशिकानुग्रहोत्तुङ्गगिरिशृङ्गपुषेपुषः ।
तृणवद्भाति मे सर्वं जगदत्यल्पमाततम् ॥ ३ ॥

देशिकानुग्रहोदारग्रहग्रस्तात्मवानहम् ।
न किंचिदपि जानामि जगदेतच्चराचरम् ॥ ४ ॥

देशिकानुग्रहोदारवेत्रोदस्तमनोग्रहः ।
विजानामि जगत्सर्वमात्ममात्रतयाधुना ॥ ५ ॥

देशिकानुग्रहोदारतरणिप्रसरोद्भवे ।
स्वानन्दैकरसं वीक्षे समुल्लसितमद्भुतम् ॥ ६ ॥

देशिकानुग्रहोदारतुषारकिरणोदये ।
आश्चर्यमान्तराम्भोऽप्युच्छ्रितमभवन्मम ॥ ७ ॥

देशिकानुग्रहोदारदावानललता भृशम् ।
दग्ध्वाशेषं जगज्जालमलं मां शीतयत्यहो ॥ ८ ॥

देशिकानुग्रहोदाररवितप्तमनोमरौ ।
स्वानन्दकन्दलः कश्चिदाश्चर्यमुदभूद्भृशम् ॥ ९ ॥

देशिकानुग्रहोदारसमीरे वाति सर्वतः ।
मम चित्तमहाम्भोधिर्थिरं न स्पन्दते कुतः ॥ १० ॥

देशिकानुग्रहोदारदारैः संततसङ्गिनः ।
मम भावे मनो लीनं निवृत्ताशेषवृत्तिकम् ॥ ११ ॥

देशिकानुग्रहोदारपीताम्बरधरस्य मे ।
शीततापादिभिर्दुःखं कथं संधीमविष्यति ॥ १२ ॥

देशिकानुग्रहोदारसाम्राज्याधिपतेर्मम ।
अशेषमभवद्वश्यमतः किमविशेषतः ॥ १३ ॥

देशिकेन्द्रकृपाखड्गखण्डिताशारिमण्डलः ।
अखण्डितनिजानन्दमण्डले निवसाम्यहम् ॥ १४ ॥

देशिकेन्द्रकृपाखड्गकृत्तचित्तमृगोत्तमः ।
शान्तभीतिश्चराम्यन्तरात्मकान्तारसंततौ ॥ १५ ॥

देशिकेन्द्रकृपाखड्गविलूनेऽज्ञानपादपे ।
संसारघोरवेतालः क्व गतो वा न वेद्म्यहम् ॥ १६ ॥

देशिकेन्द्रकृपाचन्द्रचन्द्रिकाशीतलाकृतिः ।
संसारसौरसंतापं नैवाहं वेद्मि किंचन ॥ १७ ॥

देशिकेन्द्रकृपाचन्द्रसमेधितचिदम्बुधौ ।
निमग्नोऽहं न पश्यामि स्वभिन्नं वस्तु किंचन ॥ १८ ॥

देशिकेन्द्रकृपाचन्द्रनिरस्तान्तस्तमस्ततिः ।
किमप्यहं न पश्यामि किमाश्चर्यमभूदिह ॥ १९ ॥

देशिकेन्द्रकृपाचन्द्रप्रफुल्लानन्दकैरवम् ।
आघ्रायाघ्राय हृष्यामि स्वात्मन्येव मुहुर्मुहुः ॥ २० ॥

देशिकेन्द्रकृपाचन्द्रद्रुतचन्द्रोपलान्तरः ।
विश्रान्तिमाप्तवानस्मि विज्ञानैकरसे पदे ॥ २१ ॥

कृतार्थोऽस्मि कृतार्थोऽस्मि देशिकानुग्रहादहम् ।
अतः सर्वे जना यूयमुपाद्ध्वं देशिकोत्तमम् ॥ २२ ॥

इति स्वप्नोदितां निष्ठामनुस्मरति यः पुमान् ।
सोऽसौ सत्यपरानन्दपदवीं याति पावनीम् ॥ २३ ॥

॥ हरिः ॐ ॥

# स्वानुभूतिप्रकाशिका ॥

गौरीपतिपदभजन-
क्रकचविलूनैकविषयपाशोऽहम् ।
देशिकवरकरुणोदित-
परजीवात्मैक्यतत्त्वबोधोऽहम् ॥ १ ॥

प्रशमितनिजमायोऽहं
प्रगलितजगदीशजीवभेदोऽहम् ।
प्रत्यगभिन्नपरोऽहं
प्रविततसुखपूर्णसंविदेवाहम् ॥ २ ॥

समुदस्ताश्रमकोऽहं
विध्वस्ताशेषविधिनिषेधोऽहम् ।
अस्तमिताहन्तोऽहं
निस्तुलदृग्रूपवस्तुमात्रोऽहम् ॥ ३ ॥

साप्यहमनपेक्षोऽहं
पक्षविपक्षादिभेदविधुरोऽहम्।
सूक्ष्मोऽहमक्षरोऽहं
मोक्षानन्दैकसिन्धुरेवाहम्॥ ४॥

कूटस्थचेतनोऽहं
कुक्षिस्थानेकलोककलनोऽहम्।
एकोऽहमविकलोऽहं
केवलसन्मात्रसारभूतोऽहम्॥ ५॥

वेद्योऽहमागमान्तै-
राद्योऽहं सकलभुवनहृद्योऽहम्।
विभुरहमनवद्योऽहं
शुभतरभावोऽहमप्रमेयोऽहम्॥ ६॥

शुद्धोऽहमद्वयोऽहं
बुद्धो मुक्तोऽहपमभुवात्माहम्।
शोधितपरतत्त्वोऽहं
बोधानन्दैकमूर्तिरेवाहम्॥ ७॥

शान्तोऽहमान्तरोऽहं
संततभातोऽहमन्तकारोऽहम् ।
शमितान्तत्रितयोऽहं
शाश्वतविज्ञानसमरसात्माहम् ॥ ८ ॥

अजरोऽहमव्ययोऽहं
निजमहमनिशं स्थितोऽहमचलोऽहम् ।
अवबोधैकरसोऽहं
कविवरसंसेव्यकेवलात्माहम् ॥ ९ ॥

निस्त्रैगुण्यपदोऽहं
निष्क्रियधामाहमप्रतर्क्योऽहम् ।
निरवयवोऽहमजोऽहं
निर्मलनिर्वाणमूर्तिरेवाहम् ॥ १० ॥

निरवधिनिजबोधोऽहं
निरुपमनिःसीमसत्त्वमात्रोऽहम् ।
परमानन्दघनोऽहं
परशिव एवाहमनिशमभयोऽहम् ॥ ११ ॥

---

# श्रीदक्षिणामूर्तिध्यानम् ॥

वटस्याधः कंचित्करकमलचिन्मुद्रमचलं
निटालाक्षं सूक्ष्मं मुनिवरगणासेव्यचरणम् ।
चिदानन्दाकारं मदनहरमापूर्णममलं
सदा ध्यायेदन्तः परमशिवमाचार्यवपुषम् ॥ १ ॥

कैलासशिखरे रम्ये कमनीयमणिप्रभे ।
वटद्रुमतटे नित्यं निवसन्तं जगद्गुरुम् ॥ २ ॥

दक्षिणामूर्तिमीशानं दधतं मौनमुत्तमम् ।
व्यालम्बितजटाकोटिघटितार्धकलाधरम् ॥ ३ ॥

फालभूतिलकीभूतरुचिराम्भोजलोचनम् ।
कारुण्यरसपूरैकपूरिताश्रितपादाम्बुजम् ॥ ४ ॥

शुक्तिकाकारसंकाशकर्णद्वन्द्वपुटोज्ज्वलम् ।
मणिदर्पणदर्पघ्नकपोलफलकप्रभम् ॥ ५ ॥

नवचम्पकपुष्पाभनासादण्डविराजितम् ।
दरहासलसन्मुग्धमुखोन्निद्रसरोरुहम् ॥ ६ ॥

दाडिमीबीजसंदोहसंदेहदरदावलिम् ।
बिम्बसंभ्रमधिक्कारिमधुराधरमञ्जुलम् ॥ ७ ॥

ग्रीवोदारश्रियोदस्तकम्बुसौभाग्यसंततिम् ।
श्रितकल्पलतीभूतभुजवल्लीचतुष्टयम् ॥ ८ ॥

विद्यामुद्राक्षमालैकलसत्पाणियुगाम्बुजम् ।
वीणापुस्तोज्ज्वलोद्दामकरद्वन्द्वसरोरुहम् ॥ ९ ॥

विगूढजत्रुविभ्राजिविपुलोत्तुङ्गवक्षसम् ।
आवर्तनाभिसुभगं त्रिवलीलालितोदरम् ॥ १० ॥

विशङ्कटकटिश्रोणिकरभोरुद्वयोज्ज्वलम् ।
चारुजानुयुगं वल्गुजङ्घायुगलराजितम् ॥ ११ ॥

गूढगुल्फारुणनखव्रातदीधितिशोभितम् ।
दशाङ्गुलीदलोदारपदद्वन्द्वसरोरुहम् ॥ १२ ॥

दक्षिणोरुपरिन्यस्तसव्यपादाम्बुसंभवम् ।
अपसव्यपदाम्भोजभञ्जितापस्मरं परम् ॥ १३ ॥

योगपट्टाभिरामं तं योगिवृन्दनिषेवितम् ।
पाटीरकुन्दचन्द्राभपाण्डराङ्गैकभासुरम् ॥ १४ ॥

चन्दनागरुकर्पूरचर्चितावयवोज्ज्वलम् ।
मन्दारचम्पकाशोकमल्लिकादामभूषितम् ॥ १५ ॥

तटिद्वलयसंकाशमणिकुण्डलमण्डितम् ।
कटकाङ्गदकेयूरहारग्रैवेयकोज्ज्वलम् ॥ १६ ॥

प्रत्युप्तदिव्यमाणिक्यप्रस्फुरन्मेखलावृतम् ।
कलनिस्वनमञ्जीरपदकङ्कणराजितम् ॥ १७ ॥

त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरम् ।
कंदर्पकोटिलावण्यगर्वनिर्वापणाकृतिम् ॥ १८ ॥

कंजासनमहेन्द्रादिकलिताङ्घ्रिसरोरुहम् ।
देवकिंनरगन्धर्वसंस्तुतोदारवैभवम् ॥ १९ ॥

सकृत्प्रपन्नलोकौघसरोरुहदिवाकरम् ।
संसाराशीविषालीढमृतसंजीवनौषधम् ॥ २० ॥

परमाद्वैतविज्ञानमहोदधिसुधाकरम् ।
अज्ञानध्वान्तसंतानमार्तण्डोदारमण्डलम् ॥ २१ ॥

अनन्तभवकान्तारदहनोग्रदवानलम् ।
मोहानललसज्ज्वालाजालकीलालसागरम् ॥ २२ ॥

संसारसौरसंतापसंतप्तोदारभूरुहम् ।
पञ्चाक्षरदलोल्लासिप्रणवाम्बुजषट्पदम् ॥ २३ ॥

षट्त्रिंशत्तत्त्वसोपानस्वात्मप्रासादभूपतिम् ।
दक्षाध्वरविभेत्तार शिक्षितान्धकदुःस्थितिम् ॥ २४ ॥

दारितान्तकदौरात्म्य दलितासुरसंततिम् ।
लीलाविजितकंदर्पं हालाहलधरं हरम् ॥ २५ ॥

पालिताखिलभक्तौघं वेलातीतगुणार्णवम् ।
भृङ्गावलीकालकण्ठ मङ्गलाधामभ्रुतम् ॥ २६ ॥

गङ्गाधरं वृषारूढं संगीतरसकोविदम् ।
भस्मोद्धूलितसर्वाङ्गं भवरोगभिषग्वरम् ॥ २७ ॥

भवानीभावसंगम्यं भक्तचित्तापहारिणम् ।
नासाञ्चलहिताञ्जाक्षं नागाभरणभूषितम् ॥ २८ ॥

वसानं चर्म वैयाघ्रं वैराग्यभरमन्थरम् ।
वीणानादानुसंधानविकसद्वदनाम्बुजम् ॥ २९ ॥

विश्वातीतसुखाम्भोजविलसद्भ्रमराग्रियम् ।
संसारसर्पसंदष्टजनजाङ्गलिकोत्तमम् ॥ ३० ॥

महादेवं महात्मानं महायोगीश्वरेश्वरम् ।
शाश्वतैश्वर्यसंपूर्णं शंकरं लोकशंकरम् ॥ ३१ ॥

कारणं जगतामेकमनेकाकारभासुरम् ।
कालत्रयापरिच्छेद्यं कारकग्रामवर्जितम् ॥ ३२ ॥

निःसीमपरमानन्दनिजधामनि संस्थितम् ।
निगमान्तैकसंसिद्धशुद्धविद्यैकगोचरम् ॥ ३३ ॥

अविद्याकार्यनिर्मुक्तमवाङ्मनसगोचरम् ।
अद्वयानन्दविज्ञानघन परमपावनम् ॥ ३४ ॥

आदिमध्यान्तरहितमदोहितगुणत्रयम् ।
अवेद्यं जगतां हृदयमान्तरान्तरमव्ययम् ॥ ३५ ॥

निरवद्यं निराभासं निष्क्रियं निरुपप्लवम् ।
निर्विकल्प निरातङ्कं निःसङ्गं निःसमीहितम् ॥ ३६ ॥

निस्त्रैगुण्यफलं किंचिन्निर्वाणसुखसागरम् ।
निर्द्वन्द्वानन्दसंदोहमसंदेहमनूपमम् ॥ ३७ ॥

निर्गुणं निष्कलं नित्यं निर्विकार निरञ्जनम् ।
नीरागं निरुपासङ्गं निरहंकारमक्षरम् ॥ ३८ ॥

निष्प्रपञ्चं निरालम्बं निराकारं निराश्रयम् ।
अवबोधरसैकात्म्यं ध्यायेदादिमदेशिकम् ॥ ३९ ॥

इति श्रीदक्षिणामूर्तिध्यानं परमपावनम् ।
पुत्रपौत्रायुरारोग्यमहासम्पत्प्रदायकम् ॥ ४० ॥

चतुःषष्टिकलाविद्याप्रदं पापप्रणाशनम् ।
अणिमादिमहासिद्धिविधानचतुरं शुभम् ॥ ४१ ॥

क्षयगुल्मप्रमेहादिव्याधीनामेकभेषजम् ।
भक्तिज्ञानविरक्तीनां निदानं मुक्तिसाधनम् ॥ ४२ ॥

यः पठेच्छृणुयाद्वापि नित्यं भक्तिसमन्वितः ।
स यथोक्तफलान्यादौ लब्ध्वा मुक्तो भवेद्ध्रुवम् ॥

ब्रह्मादिदेववन्द्याय सर्वलोकाश्रयाय ते ।
दक्षिणामूर्तिरूपाय शंकराय नमो नमः ॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

॥ हरिः ओम् ॥

इति दक्षिणामूर्तिध्यानं सम्पूर्णम् ॥

---

अविद्याकार्यनिर्मुक्तमवाङ्मनसगोचरम् ।
अद्वयानन्दविज्ञानघनं परमपावनम् ॥ ३४ ॥

आदिमध्यान्तरहितमपोहितगुणत्रयम् ।
अवेद्यं जगतां हृदयमान्तरान्तरमव्ययम् ॥ ३५ ॥

निरवद्यं निराभासं निष्क्रियं निरुपप्लवम् ।
निर्विकल्पं निरातङ्कं निःसङ्गं निःसमीहितम् ॥ ३६ ॥

निस्त्रैगुण्यफलं किंचिन्निर्वाणसुखसागरम् ।
निर्द्वन्द्वानन्दसंदोहममंदेहमनूपमम् ॥ ३७ ॥

निर्गुणं निष्कलं नित्यं निर्विकारं निरञ्जनम् ।
नीरागं निरुपासङ्गं निरहंकारमक्षरम् ॥ ३८ ॥

निष्प्रपञ्चं निरालम्बं निराकारं निराश्रयम् ।
अवबोधरसैकात्म्यं ध्यायेदादिमदेशिकम् ॥ ३९ ॥

इति श्रीदक्षिणामूर्तिध्यानं परमपावनम् ।
पुत्रपौत्रायुरारोग्यमहासंपत्प्रदायकम् ॥ ४० ॥

चतुःषष्टिकलाविद्याप्रदं पापप्रणाशनम् ।
अणिमादिमहासिद्धिविधानचतुरं शुभम् ॥ ४१ ॥

क्षयगुल्मप्रमेहादिव्याधीनामेकभेषजम् ।
भक्तिज्ञानविरक्तीनां निदानं मुक्तिसाधनम् ॥ ४२ ॥

यः पठेच्छृणुयाद्वापि नित्यं भक्तिसमन्वितः ।
स यथोक्तफलान्यादौ लब्ध्वा मुक्तो भवेद्ध्रुवम् ॥

ब्रह्मादिदेववन्द्याय सर्वलोकाश्रयाय ते ।
दक्षिणामूर्तिरूपाय शंकराय नमो नमः ॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

॥ हरिः ओम् ॥

इति दक्षिणामूर्तिध्यानं सम्पूर्णम् ॥

# मनोनियमनम् ॥



आशीविषविषविषमै

निमिषोन्मेषैर्निर्षवितैर्विषयैः ।

अलमधुना कलयैषाः

मानम मिहिकामयूखचूडालम् ॥ १ ॥

अहमिति मतिमतिहेये

वारय काये निरन्तरापाये ।

परशिवपदाभिधेयं

ब्रह्मणि सदये निधेहि तां हृदये ॥ २ ॥

चलदलदलचञ्चलमिम-

मचलवदचलं प्रतीत्य किल कायम् ।

हृयसि शिवपदविमुखं

शिवशिवसुमचापचापलैश्चेतः ॥ ३ ॥

यातं दिनमिदमेवं
श्वः किल भविता सुमेरुरपि हस्ते ।
इति नित्यं भावयता
भवतो कति चित्त मेरवो लब्धाः ॥ ४ ॥

कतिधा हृदनुबभूविथ
तरुतृणकृमियोनिचङ्क्रमणम् ।
दिष्ट्या मानुषभावा-
त्पारस्पृगेवासि मा त्विह प्रमदः ॥ ५ ॥

प्राक्कृतभोगावसरे
ताम्यसि चेतो मुधा कुतो हेतोः ।
न्यग्रोधबीजमुप्त्वा
शोचसि किं नाम्रमस्येति ॥ ६ ॥

इज्या तीर्थव्रज्या
प्रव्रज्या वा सतां समज्या वा ।
आस्तामपि भवतरणं
लघु तव करणं मनः शिवसरणम् ॥ ७ ॥

परयुवविदीपिकाया-
मप्रतिरूपं निरीक्ष्य वत रूपम् ।
मोहान्निपत्य चेतः
पतङ्ग मा त्वं क्षयं याहि ॥ ८ ॥

भवमिषपृथुविषशमनो
मानस भिषगेष शंकरः सेव्यः ।
प्रथमो दैव्यो भिषगिति
यं किल जननी श्रुतिः स्वयं प्राह ॥ ९ ॥

अतिमरसैरन्नरसै-
र्मानस नमसंगमाग्निभषकाणाम् ।
भुजिकर्मीभूतस्य
प्रायो वपुषः किमित्युपस्कुरुषे ॥ १० ॥

पत्रफलमात्रसुलभे
कामितफलदे प्रभौ स्थिते साम्बे ।
भजसे कृपणं नृपशुं
दुःसेव्यं हा कथं चेतः ॥ ११ ॥

आ प्रातरादिनान्ता-
दा च दिनान्तात्पुनश्चिदा प्रातः ।
व्यापारान्तरहार्यं
व्याप्रियतामिन्दुचूडचरणाब्जे ॥ १२ ॥

दुष्पूरकुक्षिपरिपूरणपारवश्या-
त्कर्पूरगौरवपुषं पुरुषं विहाय ।
अन्यं किमाश्रयसि हन्त सखे मनस्त्वं
धन्यं भजस्व सततं तरुणेन्दुचूडम् ॥

---

# नववर्णरत्नमाला ॥



ओंकारैकनिरूप्यं
पङ्कजभवनादिभावितपदाब्जम् ।
किंकरकरवशशिनं
शंकरमेकं शिवं कलये ॥ १ ॥

ऐन्द्रं पदमपि मनुते
नैव वरं यस्य पदरजःस्पर्शात् ।
सान्द्रसुखोदधिमेकं
चन्द्रकलोत्तंसमीशमासेवे ॥ २ ॥

नागेशकृत्तिवसनं
वागीशाद्यैकवन्दिताङ्घ्रियुगम् ।
भोगीशभूषिताङ्गं
भागीकृतसर्वमङ्गलं नौमि ॥ ३ ॥

नगराजशिखरवासिन-
मगजामुखकुमुदकौमुदीनिकरम् ।
गगनशिरोरुहमेकं
निगमशिरस्तन्त्रविदितमवलम्बे ॥ ४ ॥

मन्दस्मितलसदानन-
मिन्दुकलोत्तंसमम्बिकासचिवम् ।
कंदर्पकोटिशतगुण
सुन्दरदिव्याकृतिं शिवं वन्दे ॥ ५ ॥

मस्तक नम कमलाङ्घ्रि
संस्तुहि भो वाणि वरगुणोदारम् ।
हस्तयुगार्चय शर्व
स्वस्थो निवसामि निजमहिम्न्यमुना ॥ ६ ॥

क्लिन्नेक्षणमतिकृपया
संनुतमहिमानमागमशिरोभिः ।
तं नौमि पार्वतीशं
पन्नगवरभूषणोज्ज्वलकराब्जम् ॥

शिशिरारुणकंजदृशं
शशिभूषणमेकमगसुताजानिम् ।
पशुपाशपाटनपटुं
वशिनं सर्वस्य देशिकं वन्दे ॥ ८ ॥

वटविटपिनिकटनिलयं
कुटिलजटाघटितहिमकरोदारम् ।
कटिलसितकरटिकृत्तिं
निटिलाम्बकमेकमालम्बे ॥ ९ ॥

वामाङ्ककलितकान्तं
कामान्तकमादिदैवतं दान्तम् ।
भूमानन्दघनं त-
द्धाम किमप्यन्तरान्तरं भाति ॥ १० ॥

यदपाङ्गितात्प्रबोधा-
त्पदमलभेऽखण्डितात्ममात्रमहम् ।
सदयं साम्बशिवं तं
मदनाम्बकमादिदैवतं नौमि ॥ ११ ॥

सौखातिकममृतजलैः

सुसितवदनेन्दुमसृदितदिगन्तम् ।

संस्तुतममरगणैस्तं

निस्तुलमदिमानमानतोऽस्मि शिवम् ॥ १२ ॥

नववर्णरत्नमाला-

स्तुतिमेतापादिदेशिकेन्द्रस्य ।

धारयतः स्याद्भुक्तिः

सकलकलावाप्तिरथ परा मुक्तिः ॥ १३ ॥

इति श्रीसदाशिवब्रह्मेन्द्रविरचिता

नववर्णरत्नमाला संपूर्णा ॥



# आत्मविद्याविलासः ॥

निर्मुद्रितकरकमलं
चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कंचन
निरवधिकानन्दनिर्भरं वन्दे ॥

वटतरुनिकटनिवासं
पटुतरविज्ञानमुद्रितकराब्जम् ।
कंचन देशिकमाद्यं
कैवल्यानन्दकन्दलं वन्दे ॥ १ ॥

निरवधिसंसृतिनीरधि-
निपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां
परमशिवेन्द्रार्यपादुकां नौमि ॥ २ ॥

देशिकपरमशिवेन्द्रा-
देशवशोद्बुद्धदिव्यमहिमाहम् ।
स्वात्मनि विश्रान्तिकृते
सरसं प्रस्तौमि किंचिदिदम् ॥ ३ ॥

निरुपमनित्यनिरीहो
निष्कलनिर्मायनिर्गुणाकारः ।
विगलितसर्वविकल्पः
शुद्धो बुद्धश्चकास्ति परमात्मा ॥ ४ ॥

स्वाविद्यैकनिबद्धः
कुर्वन्कर्माणि मुह्यमानः सन् ।
दैवाद्विधूतबन्धः
स्वात्मज्ञानान्मुनिर्जयति ॥ ५ ॥

मायावशेन सुप्तो
मध्ये पश्यन्सहस्रशः स्वप्नान् ।
देशिकवचःप्रबुद्धो
दीव्यत्यानन्दवारिधौ कोऽपि ॥ ६ ॥

जनिविपरीतक्रमतो
भुक्त्वा प्रविलाप्य पञ्च भूतानि ।
परिशिष्टमात्मतत्त्वं
पश्यन्नास्ते मुनिः शान्तः ॥ ११ ॥

जगदखिलमिदमसारं
मायिकमेवेति मनसि मन्वानः ।
पर्यटति पटितारः
प्रक्षालितमदमानमत्सरः कोऽपि ॥ १२ ॥

नात्मनि किंचिन्माया
तत्कार्यं नास्ति वस्तुतो विमले ।
इति निश्चयवानन्त-
र्हृष्यत्यानन्दनिर्भरो योगी ॥ १२ ॥

त्वमहमभिमानहीनो
मोदितनानाजनाचारः ।
विहरति बालवदेको
विमलसुखाम्भोनिधौ मग्नः ॥ १४ ॥

अवधूतकर्मजालो
जडवधिरान्धोपमः कोऽपि।
आत्मारामो यतिरा-
ऽटवीकोणेष्वटन्नास्ते ॥ १५ ॥

शान्त्या दृढोपगूढः
शान्तसमस्तान्यवेदनोदारः।
रमते रमन्न एको
रम्ये स्वानन्दपर्यङ्के ॥ १६ ॥

उन्मूलितविषयारिः
स्वीकृतवैराग्यसर्वस्वः।
स्वात्मानन्दमहिम्नि
स्वाराज्येऽस्मिन्विराजते यतिराट् ॥ १७ ॥

सवितर्यपि शीतरुचौ
चन्द्रे तीक्ष्णेऽप्यथो वहत्यग्नौ।
मायिकमिदमिति जानन्
जीवन्मुक्तो न विस्मयी भवति ॥ १८ ॥

अज्ञानवैरिविजयी
प्रज्ञामातङ्गमस्तकारूढः ।
विहरति संयमिराजः
समरससुखधाम्नि सर्वतो रम्ये ॥ १९ ॥

शान्ताहंकृतिदोषः
सुसमाहितमानसः कोऽपि ।
पूर्णेन्दुशिशिरभावो
राजत्यानन्दसत्यचिद्रसिकः ॥ २० ॥

तिष्ठन्परत्र धाम्नि
स्वीयसुखास्वादपरवशः कश्चित् ।
क्वापि ध्यायति कुहचि-
द्गायति कुत्रापि नृत्यति स्वैरम् ॥ २१ ॥

अगृहीताघकलङ्कः
प्रशमितसंकल्पविभ्रमः प्राज्ञः ।
न्यक्कृतकार्यकलाप-
स्तिष्ठत्यापूर्णसीमनि क्वापि ॥ २२ ॥

चपलं मनःकुरङ्गं
चारु गृहीत्वा विमर्शवागुरया ।
निगमारण्यविहार-
श्रान्तः शेते स्वधाम्नि कोऽप्येकः ॥ २३ ॥

दारुणचित्तव्याघ्रं
धीरमनःखड्गधारया हत्वा ।
अभयारण्ये कोऽपि
स्वैरविहारी जयत्येकः ॥ २४ ॥

सज्जनहृदयसरोजो-
न्मीलनकरशीकरप्रसरः ।
एको यतिवररूपो
निर्दोषश्चरति चिद्गगने ॥ २५ ॥

कुवलयविकासकारण-
मज्ञानध्वान्तकौमुदीप्रसरः ।
शुद्धो मुनीन्द्रचन्द्रः
सुरसेव्ये लसति विष्णुपदे ॥ २६ ॥

स्वानन्दामृतसेकै-
रान्तरसंतापसंततिं शमयन् ।
चित्रमचञ्चलवृत्ति-
श्चिद्व्योमनि भाति योगिवर्यघनः ॥ २७ ॥

सुमनःसौरभमञ्जुल-
संचारनिवारिताखिलश्रान्तिः ।
संयमिचारुसमीरो
विहरत्यानन्दसंविदारामे ॥ २८ ॥

निःश्रेयससरसफले
निर्मलविज्ञानपल्लवमनोज्ञे ।
वीतभये विपिनतले
यतिशितिकण्ठो विभाति कोऽप्येकः ॥ २९ ॥

निःसारभुवनमरुस्थल-
मुत्सार्यानन्दसारसंपूर्णे ।
वरसरसि चिन्मयेऽस्मि-
न्परहंसः कोऽपि दीव्यति स्वैरम् ॥ ३० ॥

निखिलागमपल्लविते
  निगमशिरस्तन्त्रशीतलोद्याने ।
मधुरतरमञ्जुवाचः
  कूजन्नास्ते यतीन्द्रकलकण्ठः ॥ ३१ ॥

दारितमोहमदेभो
  दूरीकृतसकलदुरितशार्दूलः ।
विबुधोत्तमसिंहवरो
  विहरत्यानन्दविततकान्तारे ॥ ३२ ॥

अज्ञानमृगवरोज्झित-
  विज्ञानोत्तुङ्गशृङ्गशिखरितले ।
मतिसलिलशीतलाङ्गो
  यतिमदकलभो विराजते विहरन् ॥ ३३ ॥

नासाञ्चलनिहिताक्षो
  नामादिभ्यो निवर्तितस्वान्तः ।
तटिनीतटेषु तत्त्वं
  ध्यायन्नास्ते यतिः कोऽपि ॥ ३४ ॥

आशावसनो मौनी
नैराश्यालंकृतिः शान्तः ।
करतलभिक्षापात्र-
स्तरुतलनिलयो मुनिर्जयति ॥ ३५ ॥

भूतलमृदुतरशय्यः
शीतलवातैकचामरः शान्तः ।
राकाहिमकरदीपो
राजति यतिराजशेखरः कोऽपि ॥ ३६ ॥

विजननदीकुञ्जगृहे
मञ्जुलपुलिनैकमञ्जुतरतल्पे ।
शेते कोऽपि यतीन्द्रः
समरसुखबोधवस्तुनिस्तन्द्रः ॥ ३७ ॥

विपुलशिलातलफलके
विमलपरिद्वारिपरिष्कृतोदारे ।
मन्दं मलयजपवने
वाति प्रस्वपिति कोऽपि यतिराजः ॥ ३८ ॥

आन्तरमेकं किंचि-
त्सन्ततमनुसंदधन्महामौनी ।
करपुटभिक्षामश्न-
न्नटति हि वीथ्यां जडाकृतिः कोऽपि ॥३९॥

प्रविलाप्य जगदशेषं
परिशिष्टाखण्डवस्तुपरतन्त्रः ।
प्राश्नाति कवलमास्ये
प्राप्तं प्रारब्धकर्मणा कोऽपि ॥ ४० ॥

निन्दति किमपि न योगी
नन्दति नैवापरं किमप्यन्तः ।
चन्दनशीतलहृदयः
कन्दलितानन्दमन्तरस्त्वास्ते ॥ ४१ ॥

संत्यज्य शास्त्रजालं
संव्यवहारं च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवी-
मास्ते निष्कम्पदीपवद्योगी ॥ ४२ ॥

तृणपङ्कचर्चिताङ्ग-
स्तृणमिव विश्वं विलोकयन्योगी ।
विहरति रहसि वनान्ते
विजरामरभूम्नि विश्रान्तः ॥ ४३ ॥

पश्यति किमपि न रूपं
न वदति न शृणोति किंचिदपि वचनम् ।
तिष्ठति निरुपमभूमनि
निष्ठामवलम्ब्य काष्ठवद्योगी ॥ ४४ ॥

जात्यभिमानविहीनो
जन्तुषु सर्वत्र पूर्णतां पश्यन् ।
गूढं चरति यतीन्द्रो
मूढवदखिलागमार्थतत्त्वज्ञः ॥ ४५ ॥

उपधाय बाहुमूलं
परिधायाकाशमवनिमास्तीर्य ।
प्रस्वपिति विरतिवनितां
परिरभ्यानन्दपरवशः कोऽपि ॥ ४६ ॥

गतभेदवासनाभिः
स्वप्रज्ञोदारवारनारीभिः ।
रमते सह यतिराज-
स्त्वप्यन्तान्तःपुरे कोऽपि ॥ ४७ ॥

वैराग्यविपुलमार्गे
विज्ञानोद्दामदीपिकोद्दीप्रम् ।
आरुह्य तत्त्वहर्म्ये
मुक्त्या सह मोदते मुनिराट् ॥ ४८ ॥

विजनतलोत्पलमालां
वनितावैतृष्ण्यकल्पवल्लीं च ।
अवमानामृतगुटिका-
मात्मज्ञः कोऽपि गृह्णाति ॥ ४९ ॥

न निषेधति दोषधिया
गुणबुद्ध्या वा न किंचिदादत्ते ।
आत्मैकरूपमखिलमिति
ज्ञात्वोदास्ते मुनिः कोऽपि ॥ ५० ॥

भूतं किमपि न मनुते
भावि च किंचिन्न चिन्तयत्यन्तः ।
पश्यति न पुरोवर्त्यपि
वस्तु समस्तार्थसमरसः कोऽपि ॥ ५१ ॥

निगृहीताखिलकरणो
निर्मृष्टाशेषविषयेहः ।
तृप्तिमनुत्तमसीमां
प्राप्तः पर्यटति कोऽपि यतिवर्यः ॥ ५२ ॥

संत्यजति नोपपन्नं
नासंपन्नं च वाञ्छति क्वापि ।
स्वस्थः शेते यतिरा-
डान्तरमानन्दमनुभवन्नेकः ॥ ५३ ॥

कामपि विमलां पदवी-
मासाद्यानन्दसंविदुन्निद्राम् ।
आस्ते भिक्षुक एको
विहरन्निर्मुक्तबन्धनः स्वैरम् ॥ ५४ ॥

वस्त्वन्यस्तमिताखिल-
विश्वविकारे विलीनमनाः ।
राजति परानपेक्षो
राजाखिलवीतरागाणाम् ॥ ५५ ॥

आचार्यपादपूतः
समवाप्तापारचिदाकारः ।
प्रशमितसकलविभेदः
परहंसः कश्चिदाभाति ॥ ५६ ॥

वर्णाश्रमव्यवस्था-
मुक्तीर्य विधूय विध्यादीन् ।
परिशिष्यते यतीन्द्रः
परिपूर्णानन्दबोधमात्रेण ॥ ५७ ॥

क्षयमुपनीय समस्तं
कर्म प्रारब्धमुपभुज्य ।
प्रविगलितदेहबन्धः
प्राज्ञो ब्रह्मैव केवलं भवति ॥ ५८ ॥

स्तिमितमनन्तमनाद्यं
ततमतुलानन्दबोधघनम् ।
अविकल्पमाद्यमेकं
तन्मात्रं विद्यते किमपि ॥ ५९ ॥

अक्षरमजरमजातं
सूक्ष्मतरापूर्वशुद्धविज्ञानम् ।
अगलितसर्वैश्वर्यं
परतत्त्वं वर्तते किमपि ॥ ६० ॥

सुखतरमपरमदूरं
सारं संसारवारिधेस्तारम् ।
समरसमभयमपारं
सत्किंचन दीप्यते तत्त्वम् ॥ ६१ ॥

अरसमगन्धमरूपं
विरजस्कमसत्त्वमतमस्कम् ।
निरुपमनिर्भयतत्त्वं
तत्किमपि द्योतते नित्यम् ॥ ६२ ॥

वस्तुन्यस्तमिताखिल-
दिश्वविहारे विलीनमनाः ।
राजति परानपेक्षो
राजाखिलवीतरागाणाम् ॥ ५५ ॥

आचार्यपाङ्गदृष्ट्या
समवाप्तापारचिदाकारः ।
प्रशमितसकलविभेदः
परहंसः कश्चिदाभाति ॥ ५६ ॥

वर्णाश्रमव्यवस्था-
मुत्तीर्य विधूय विध्यादीन् ।
परिशिष्यते यतीन्द्रः
परिपूर्णानन्दबोधमात्रेण ॥ ५७ ॥

क्षयमुपनीय समस्तं
कर्म प्रारब्धमुपभुज्य ।
प्रविगलितदेहबन्धः
प्राज्ञो ब्रह्मैव केवलं भवति ॥ ५८ ॥

स्तिमितमनन्तमनाद्यं
ततमतुलानन्दबोधघनम् ।
अविकल्पमाद्यमेकं
सन्मात्रं विद्यते किमपि ॥ ५९ ॥

अक्षरमजरमजातं
सूक्ष्मतरापूर्वशुद्धविज्ञानम् ।
प्रगलितसर्वक्लेशं
परतत्त्वं वर्तते किमपि ॥ ६० ॥

सुखतरममरमदूरं
सारं संसारवारिधेस्तारम् ।
समरसमभयमपारं
सत्किंचन दीप्यते तत्त्वम् ॥ ६१ ॥

अरसमगन्धमरूपं
विरजस्कमसत्त्वमतमस्कम् ।
निरुपमनिर्भयतत्त्वं
तत्किमपि द्योतते नित्यम् ॥ ६२ ॥

इति गुरुकरुणापाङ्गा-
दार्याभिर्ध्यधिकषष्टिसंख्याभिः।
निरवद्याभिरवोचं
निगमशिरस्तन्त्रसारभूतार्थम्॥

गदितमिमात्मविद्या-
विलासमनुवासरं स्मरन्विबुधः।
परिणतपरात्मविद्यः
प्रपद्यते सपदि परमार्थम्॥

परमशिवेन्द्रश्रीगुरु
शिष्येणेत्थं सदाशिवेन्द्रेण।
रचितेयमात्मविद्या-
विलासनामा कृतिः पूर्णा॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीपरमशिवेन्द्र-
सरस्वतीपादाब्जसेवापरायणश्रीसदाशिवेन्द्रसरस्वत्या
विरचितः आत्मविद्याविलास समाप्तः॥

---

# आत्मविद्याविलासः ॥

यत्पादपद्ममकरन्दजुषां नराणां
संसारघोरभुजगान्न भवेत्स्म भीतिः ।
सच्चिद्घनं सकलसौख्यलवाम्बुराशिं
श्रीदक्षिणाभिमुखमूर्तिमजं भजेऽहम् ॥ १ ॥

एतावदेव खलु पुंभिरवाप्तुमर्हं
यच्चेतसो निलयनं निजतत्त्वबोधे ।
आक्रोशनं श्रुतिशिरांसि यदर्थमेव
कुर्वन्ति येन हि भवेत्पुरुषः सुखाब्धिः ॥ २ ॥

मातेव पुनरनुबोधयति श्रुतिर्हि
लोकं समस्तमपि योजयितुं सुखेन ।
तस्माच्छ्रुतेरभिहितार्थमतन्द्रितेन
चित्तेन साधयितुमत्र जना यतध्वम् ॥ ३ ॥

आदाविदं सकलमेव जगन्निदानी-
स्तम्भादिवच्चिदनु शक्तिवशात्परस्मात् ।
आकाशवायुदहनाम्बुभुवो बभूवु-
र्वातप्रसक्तसलिलादिव वीचिपूरः ॥ ४ ॥

सूक्ष्मात्प्रभूतगतसत्त्वरजस्तमोभि-
र्लिङ्गं शरीरमुदभूदथ ईश्वरेच्छा ।
पञ्चीचकार वियदादिकभूतसूक्ष्मा-
ण्यण्डं समभूदथ इदं सह जीवभोग्यैः ॥ ५ ॥

सृष्ट्वा जगत्सकलमेवमशेषकर्ता
तत्राविशत्पुनरुपागतजीवभावः ।
विस्मृत्य सत्यसुखबोधमयस्वरूपं
भ्रान्त्या भ्रमत्यनिशमस्तविवेकलेशः ॥ ६ ॥

इत्थं प्रमादवशतः परिघूर्णमानो
देहात्मबुद्धिपरिकल्पितकर्मबन्धः ।
स्वर्गादिभोगगमनागमनातिखिन्नो
लब्ध्वाविवेक भवमभ्युपगच्छदात्मा ॥ ७ ॥

मायायुतस्त्वगमदीश्वरतां चिदात्मा
चाविद्यया युगभवद्धृतजीवभावः ।
माया भवेद्विमलसत्त्वगुणप्रधाना
प्रोक्ता मलापिहितसत्त्वगुणा त्वविद्या ॥ ८ ॥

एकोऽप्यनेक इव भाति शरीरभेदा-
दात्मा घटादिगतभेदवशाद्वियद्वत् ।
देहेन्द्रियादिषु चलत्सु निजप्रकाशा-
त्पूर्णोऽपि निश्चलतरोऽपि विकारवद्वत् ॥ ९ ॥

एवं भवार्णवनिमज्जनदुःखितेषु
लोकेषु पूर्वजनिसंचितपुण्यपुञ्जैः ।
कश्चिद्विशुद्धमतिरेत्य गुरुं कृपाब्धिं
प्राह प्रणम्य भवसागरलङ्घनेच्छुः ॥ १० ॥

संसारघोरजलधौ भगवन्नपारे
तापत्रयौघदहने सहजारिनक्रे ।
मोहाम्भसि प्रचलदुग्रवमृत्युभङ्गे
वीक्ष्यान्तरासि पतितं जगदद्य भीतः ॥ ११ ॥

मातुः स्थितस्य जठरे वचसां च दूरं
दुःखं पुनर्जननकालभवं दुरूह्यम् ।
बाल्येऽपि दुःखमतिपक्षमवारणीय-
मालोच्य भीतिरधुना महती ममोत्था ॥ १२ ॥

तारुण्यमेत्य कुलयौवनरूपमंप-
द्विद्यात्मगर्वपिहितात्महिताभिलाषः ।
विण्मूत्रमांसरुधिरास्थिमये शरीरे
नार्या रुचिं समुपयाति जनो विचित्रम् ॥ १३ ॥

सर्वापदां निलयमेत्य वयोऽधिकत्वं
जन्तुः सुखं न लभते ह्यपि किंचिदत्र ।
पुंसामिहास्ति न भयं खलु मृत्युतोऽन्य-
द्धिक्कृत्य संसृतिमिमामभयं विरक्तः ॥ १४ ॥

स्वामिन्कथं मम भवार्णवलङ्घनं स्या-
दायासलेशरहितं वद तत्र हेतुम् ।
श्रुत्वा तु शिष्यवचनं रमणीयमित्थं
प्रत्युत्तरं गुरुरदात्कृतमन्दहासः ॥ १५ ॥

देहेन्द्रियासुहृदयादिकचैत्यवर्गा-
त्प्रत्यक्चितेर्विभजनं भववारिराशेः ।
संतारणे प्लव इति श्रुतिडिण्डिमोऽयं
तस्माद्विचारय जडाजडयोः स्वरूपम् ॥ १६ ॥

प्रत्यक्चितिर्वपुरिदं न भवेज्जडत्वा-
त्कुड्यादिवज्जडतयाप्यसवो न चित्स्युः ।
नापीन्द्रियाणि करणं कुत एव चित्स्या-
त्कुद्दालकादिवदिति प्रविचारय त्वम् ॥ १७ ॥

दृश्यत्वतो न मनसश्च भवेच्चितित्वं
नाहंकृतिश्च परिणामवती चितिः स्यात् ।
बुद्धेरचित्त्वमपि जन्मविनाशवत्त्वा-
च्चित्तं च दृश्यमचिदित्यनुचिन्तय त्वम् ॥ १८ ॥

बुद्ध्वा समस्तमपि दृश्यमचित्स्वरूपं
प्रत्यक्चितिं च निजरूपतया विदित्वा ।
देहेन्द्रियाद्यखिलसाक्ष्यहमित्यजस्रं
संचिन्त्य व्यपगताखिलसंशयः सन् ॥ १९ ॥

देहादिकं जगदसज्जडदुःखरूपं
मय्यद्वितीयनिजबोधसदादिरूपे।
संदृश्यते भ्रमवशाद्गगने निरंशे
गन्धर्वपत्तनमिवेत्यनुभावय त्वम् ॥ २० ॥

या चित्प्रभा त्वमिति गेयविभासयित्री
यत्संक्रमाद्घटपटाद्यवभासिका धीः।
आब्रह्मकीटमहमित्यवभासमाना
या सैव संविदिति चिन्तय संततं त्वम् ॥ २१ ॥

जाग्रत्सुखत्रिविधधामसुसाक्षिणी या
जाग्रन्मुखत्रिविधधाम विलक्षणा या।
स्वमाद्यनुस्मृतिबलात्सततैकरूपा
सैवाहमस्मि चितिरित्यवधारय त्वम् ॥ २२ ॥

नोदेति नास्तमुपयाति न वृद्धिमेति
नैवोपयाति परिणाममपक्षयं वा।
स्वाश्रयस्तमर्त्यजननादिविकारसाक्षि-
ण्येषा हि संविदिति चिन्तय संततं त्वम् ॥

मच्छेषतां समवलम्ब्य सुतादिसर्वं
येन प्रियं भवति तेन सुखस्वरूपः ।
देहेन्द्रियादिविषयप्रलयैकसाक्षी
यस्माचतः सदिति मे निजरूपमास्स्व ॥ २४ ॥

आदौ त्वमेव सदभूरविशेषरूप-
स्त्वत्तोदितं जगदिदं सविशेषजातम् ।
त्वय्येव तिष्ठति तथा त्वयि चावसाने
संलीयते जलनिधाविव बुद्बुदादिः ॥ २५ ॥

व्याप्तित्वहेतुबलतो न दिशास्ति मेऽन्तो
नित्यत्वहेतुबलतश्च न कालतोऽन्तः ।
सार्वात्म्यहेतुबलतश्च न वस्तुतोऽन्त-
स्तस्मादनन्तमिति मे निजरूपमास्स्व ॥ २६ ॥

एवं निरन्तरसमाधिवशान्निराधि-
र्ज्ञानाग्निदग्धसहकारणजन्मबीजः ।
आविर्भवन्निजसुखानुभवैकरसो
ब्रह्मैव नूनमिह संभवामि ध्रुवं त्वम् ॥ २७ ॥

इत्थं गिरा विमलया परसौख्यदात्र्या
वाचा गुरोर्विमथिताखिलसंशयौघः ।
शिष्यः समाधिपरिशीलनतीक्ष्णदिव्य-
ज्ञानासिखण्डितभवाख्यविपद्रुमोऽभूत् ॥ २८ ॥

स्वानन्दमप्रतिहतं परिभुज्य हर्षा-
दश्रुप्रपूर्णनयनः पुलकाङ्किताङ्गः ।
शिष्यः सगद्गदमुवाच गुरुं घृणाब्धिं
नत्वा तदङ्घ्रियुगलं विनयोपयुक्तः ॥ २९ ॥

स्वामिन्भवद्वचनदिव्यसुधाभिषिक्त-
स्वानन्दमञ्जुनगरे विहरामि नित्ये ।
अज्ञानदुर्हृदमतीव शितेन सम्य-
ग्ज्ञानासिना परिविदूय सहानुजातम् ॥ ३० ॥

गच्छामि कुत्र किमहं करवाणि किं वा
गृह्णामि किं परिजहामि मयि प्रपूर्णे ।
निर्व्याजसौख्यजलधौ परिदृश्यमानं
फेनादिकं जगदिति स्थिरनिश्चयो मे ॥ ३१ ॥

मायाभिधो जलधरो जगदाख्यमम्बु
वर्षत्वनेन मम चिद्वपुषः क्षतिः का ।
लाभोऽपि वा क इति संततमात्मरूपं
संचिन्तयन्स्थिरमतिर्विहरामि नित्ये ॥ ३२ ॥

वाक्कायमानसभवं सकलं हि कर्म
प्रोक्तं शुभाशुभमयं न ततोऽस्ति भिन्नम् ।
वागादिसाक्षिणि कथं मयि निर्मले स्या-
त्कर्मद्वयं तदुदितं जननादिकं वा ॥ ३३ ॥

व्यावृत्तरूपमिदमेव जगद्विभिन्नं
ज्ञानं स्वभिन्नमनुवृत्ततयाखिलेषु ।
ज्ञानं च भिन्नमिति चेज्जडतादिदोष-
प्राप्तिर्भवेच्छ्रुतिशिरांसि न तं सहन्ते ॥ ३४ ॥

नैवेन्द्रियाणि विषयेषु नियोजयामि
प्राग्वासनावशत एव हि तानि यान्ति ।
स्वान्गोचरान्प्रति ममास्ति न मासितापि
सा साध्यभेदकलिता खलु नोऽप्यसत्यः ॥३५॥

भेदोऽपि साक्ष्यगत एव न साक्षिणो मे
भेदस्य साक्षिणि कथं प्रभवेत्स भेदः।
भेदो न सुप्तिसमयेऽनुपलम्भनाच्च
सन्मात्रिता न इह दृष्टतया न वाच्या ॥ ३६ ॥

विश्वं मदेतदिति कार्यकरत्वहेतो-
र्यद्यस्य सत्त्वमिह साधयितुं यतेथाः।
तर्ह्यत्र रज्जुभुजगाद्यपि सद्बलात्स्या-
त्सत्यत्वहेतुरिदमाहुरबाधितत्वम् ॥ ३७ ॥

कीदृग्विधं जगदये वद सत्त्वचित्त्वा-
द्याकारहीनमिति पृष्टवतेऽस्ति मह्यम्।
प्रत्युत्तरं किमिति ते तव मौनमेव
प्रत्युत्तरं भवति मां प्रति गच्छ जाल्म ॥ ३८ ॥

ज्ञानाग्निदग्धमपि भाति जगद्विचित्रं
यच्च ध्वनिभ्रमवतः सविशेषबोधात्।
तस्मिन्भ्रमे विमथितेऽपि तथैव भाति
दिग्वत्त्वथो मम च तद्वदतो न सत्त्वत् ॥ ३९ ॥

भूमिं जले तदपि तेजसि तच्च वायौ
तं व्योम्नि तत्त्रिगुणया सह मय्यनन्ते।
पूर्णे विलाप्य परिशिष्टमखण्डसंवि-
त्स्वानन्दरूपमनुभूय रमेऽहमद्य ॥ ४० ॥

अज्ञानतन्निरसने मयि बोधरूपे
स्यातां कथं तिमिरतद्विरती इवार्के।
बन्धश्च मोक्ष इति कल्पनमप्यसत्यं
भ्रान्त्यैव भात्यखिलसाक्षिणि नित्यमुक्ते ॥ ४१ ॥

आरब्धकर्मणि च भोगत एव नष्टे
प्राणादयोऽपि मम नोत्क्रमितुं समर्थाः।
तप्ताग्निनिष्ठजतुवन्मयि पूर्णबोधे
लीना भवन्ति न पुनर्जननादिकं स्यात् ॥ ४२ ॥

आम्नायमस्तकसुसंस्कृतवैभवोऽहं
व्योम्नोऽपि पूर्णतममूर्तिरहं स्थितोऽहम्।
सर्वालयोऽहमहमाद्यवभासकोऽहं
वागाद्यगोचरसदोदितसौख्यकोऽहम् ॥ ४३ ॥

इति श्रीसदाशिवेन्द्रसरस्वत्या विरचितः
आत्मविद्याविलासः संपूर्णः ॥

---

# Sastra Booklets.

| | |
|---|---|
| श्रीमद्भगवद्गीता BHAGAVADGITA Text alone in bold Characters Very useful for parayanam Royal 8vo Paper cover | 0 8 |
| Do Do Crown 8vo Silk Bound | 0 12 |
| सिद्धान्तकल्पवल्ली SIDDHANTAKALPAVALLI with the commentary Kesariavalli by Sri Sadasivabrahmendra | 0 8 |
| श्रीसदाशिवेन्द्रकृतप्रकरणानि Minor Works by Do | 0 6 |
| आत्मविद्याविलासः ATMAVIDYAVILASA by Do. | 0 2 |
| व्यासतात्पर्यनिर्णय· VYASATATPARYANIRNAYA by Ayyanna Dikshita Cr 8vo | 0 8 |
| ललितात्रिशती LALITA TRISATI with the commentary of Sri Sankara Bhagavatpadacharya Cr 8vo | 0 8 |

सर्ववेदान्तसिद्धान्तसारसंग्रहः SARVA-VEDANTASIDDHANTASARA-SANGRAHA by Do — 0 8

विवेकचूडामणि VIVEKACHUDA-MANI by Do — 0 8

श्रुतिमतोद्द्योतः SRUTIMATODDYOTA by Tryambaka Sastri Cr. 8vo — 0 8

अद्वैतसिद्धान्तवैजयन्ती ADVAITASID-DHANTA VAIJAYANTI by Do — 0 8

पातञ्जलदर्शनः PATANJALA DARSANA with the commentary of Ananta Pandita — 0 6

उत्तरगीता UTTARA GITA with the commentary of Sri Gaudapadacharya — 0 6

अवैदिकदर्शनसंग्रहः AVAIDIKADARSA-NASANGRAHA by *Gangadhara Va-japeya Yaji* *Royal 16 mo* — 0 3

प्रस्थानभेदः PRASTHANABHEDA by Sri Madhusudanasarasvati Royal 16. — 0 3

शिवकर्णामृतम् SIVAKARNAMRITA by Appaya Dikshita Cr. 8vo — 0 6

रामायणसारसंग्रहः भारतसारसंग्रहश्च RAMAYANASARASANGRAHA & BHARATASARASANGRAHA by Do, with his own commentary. — 0 12

ब्रह्मतर्कस्तवः पञ्चरत्नस्तुतिश्च BRAHMA-TARKASTAVA and PANCHA-RATNASTUTI by Do. with his own commentary & an English Introduction by *R Krishnaswamy Sastry*. 1 0

श्रीरुद्रभाष्यम् SRI RUDRA BHASHYA by Venkatanatha Cr 8vo 0 12

शिवतत्त्वरहस्यः SIVATATTVARAHASYA A commentary on the Sivashtottara by Nilakantha Dikshita Cr 8vo 0 12

अद्वैतमकरन्दः ADVAITAMAKARANDA *of Lakshmidhara with the* commentary of Svayamprakasa Yati and an English Indroduction by R. Krishnaswamy Sastry M A Cr.8vo 0 6

लघुवासुदेवमननम् LAGHUVASUDEVAMANANAM A clear synopsis of the Advaita Vedanta with an English Indroduction by R. Krishnaswami Aiyar M.A B.L. 1 4

वेदान्तसारवार्त्तिकराजसंग्रहः, पञ्चीकरणवार्त्तिकं च VEDANTASARAVARTTIKARAJASANGRAHA and PANCIKARANAVARTTIKA by Sri Suresvaracharya 0 3

वेदान्तडिण्डिमः VEDANTA DINDIMA 0 2

पञ्चीकरणम्, संक्षिप्तपञ्चीकरणम्, पञ्चीकृतम्, साधनचतुष्टयं च PANCIKARANA etc & SADHANACHATUSHTAYA 0 2

लघुप्रकरणानि MISCELLANEOUS PRAKARANAS by differend authors 0 3

*Complete Catalogue can be had on application*



